# विषयसूचिका

★

# नवपद्यमाला

— कूरं तिरुवाळि नरसिंहः, वेल्हा-गोवा

सूचितं विंशतिस्सूत्रं शिक्षिताः खलु दुर्जनाः ।
पेदिरे सर्वमूल्यानि पातु नः श्रीमतीन्दिरा ।। १

अगृहीणां गृहं दत्तं यान्त्रिकाणां ऋणं तथा ।
योजितं विंशतिस्सूत्रे विश्वसौभाग्यहेतवे ।। २

लेखिनी पुस्तकं पत्रं वस्त्रं निःशुल्कबोधनम् ।
दीयते रिक्तछात्राणां विंशतिस्सूत्रवैभवात् ।। ३

आत्मना स्वात्मसर्वस्व प्रभुत्वाय प्रकाशिता ।
आयशुल्कं ददौ ते च शेषसर्वस्ववाञ्छया ।। ४

आपणेष्वट्टशालासु दृश्यते मूल्यपट्टिका ।
एवं सकलसौविद्यं जातं नूतनशासनात् ।। ५

क्षेमङ्कराणि कृत्यानि कृतानि खलु भारते ।
कारणं विंशतिस्सूत्रं जानीहि मम मित्रम ।। ६

प्रभूणां सेवकानाञ्च मिथो मैत्री प्रकल्पिता ।
बन्धो वा बन्धवार्ता वा नास्ति नास्त्येव भारते ।। ७

विस्मयन्ति बुधा लोके प्रस्तुवन्ति सदाऽधुना ।
भारतं भाग्यसंपन्नं चक्रे नेरुसुता मुदा ।। ८

वन्दे नेरुसुतां विशालहृदयां सत्कार्यसङ्कल्पिणीं,
दीनानां हृदयंगमां हितकरीं सद्बुद्धियुक्तां रमाम् ।
धूर्तानां भयकारिणीं बहुमुख प्रज्ञाप्रभाशालिनीं,
सेवाधर्मकरीं प्रधानसचिवां नारीषु सर्वोत्तमाम् ।। ९

# आत्ययिकस्य फलम् ?

देशे आत्ययिकी स्थितिः
प्रविश्य वत्सरपरिपूर्तिरासीत् ।
तस्याः फलं कीदृशमिति, किय·
तीवा प्रगति स्साधितेति विचा-
रणा कृता तत्र तत्र सभासु ।
बह्वो मेधाविनः, नायकाश्च
बहुमुखानभिप्रायान् स्वीयान्
प्रकटीचक्रुः । किञ्चिदिव सत्फ-
[illegible] तं, अपि च साधनीयं
सुबहु वर्तत इति केचन निश्चि-
न्वन्ति । देशीयेषु सर्वेष्वपि
रङ्गेषु नूतनोत्तेजः, विद्युक्त
दैनन्दिनकार्येषु अविलम्बः, सम-
भवदिति अभिप्रयन्ति । कार्मिक-
व्यावसायिकरङ्गेषु अधिको-
त्पत्तिः दृश्यत इति सभाङ्गणेषु
नायकानामुद्घोषणा शोश्रूयते ।
नित्यावसरवस्तूनां मूल्यस्य
स्थिरताऽनुभूयत इति महाना-
नन्दः जनतायाः । अक्रमव्या-
पाराणां किञ्चिदिव वञ्चका-
नाञ्च निरोधः कृत इव भाति।
गुप्तधनस्य बहिराकर्षणे पूर्वस्मा-
दपि अधिकतरा कृतकृत्यता
दृश्यते सर्वकारस्य । केचन
राष्ट्रीयाः आत्ययिकस्य दीर्घी-
करणमपि वाञ्छन्ति, येन सर्व-
प्रकारेण प्रगति स्साधिता भवे-
दिति धिया । साधितं फलमत्यल्पं,
साध्यन्तु सुबहु वर्तत इत्यपि
वचनं न सत्यदूरम् । आत्ययिक-
प्रवेशात् केषाञ्चन वैदेशिकानां
भारतस्योपरि समुद्भूताः दुर्भा-
वनायाः अभावः क्रमशः समभव-
दिति भूयः भव्यम् । प्रगति-
निरोधकदुष्टशक्तयः निश्शेषं
न विनष्टाः, किन्तु ताः, रूपा-
न्तरेण, प्रकारान्तरेण च स्वीयं
कर्म यथाशक्ति यथावकाशं
च निर्वर्तयन्तीति वैमर्शिकाभि-
प्रायः । पूर्वस्मादपि खण्डा-
न्तरेषु भारतस्य प्रतिष्ठा
सुप्रतिष्ठिता च वर्तते । शर्म-
ण्यादिषु देशेषु वायकानां सौम-

नस्यसांस्कृतिकव्यापारपरिवर्धन-गौरवाभिनन्दनपुरस्सरं पर्यटनं चानुभूयते। यद्यपि आत्ययिकी स्थिति रनपेक्षणीयैव, अथापि देशस्य, प्रजानां च, सम्यक्कर-णाय कियन्तमपि काल मिय-मावश्यकीति प्रतिभाति। उद्यो-गिषु, व्यापारिषु, कार्मिकेषु' प्रजासु च यदा परिपूर्णतया अविनीतिः, वञ्चना, श्रद्धा, विश्वासश्च सुस्थिरा भवेत्, तदा आययिकी स्वयमेवादृश्या भविष्यति।

## कविवाक्षु गंगाऽवतारः

ज. शेषाद्रि अय्यंगार्यः,
न्यायाध्यापकः, S V. प्राच्यकलाशाला, तिरुपति।

इतिहासपुराणेषु गङ्गावतारवैभवं विपुलं वर्णयन्ति प्राञ्चो महर्षयः। विश्वामित्रमुखेन रामलक्ष्मणाभ्यां गङ्गाऽवतारवैभवं विस्तरयति वाल्मीकि श्रीरामायणे। "इमं मे गङ्गे यमुने सरस्वति" इत्यादितैत्तरीयो मन्त्रवर्णः गङ्गादिकाः अष्टमहानदीः स्तौति। इत्थं प्राचीनासु वाक्ष सुविदितवैभवा सुरसिन्धुः अर्वाचां कविवराणां वाक्सागरेऽपि अवतरन्ती सहृदयान् रञ्जयति।

भर्तृहरिकविः पुनः नीतिशतके गङ्गावतारं अविवेक-कृत्यस्योदाहरणीचकार।

"शिरः शार्वं स्वर्गात् पशुपतिशिरस्तः क्षितिधरं,
महीध्रादुत्तुंगादवनिमवनेश्चादि जलधिम्।
अधोऽधो गंगेयं पदमुपगता स्तोकमथवा
विवेकभ्रष्टानां भवति विनिपातः शतमुखः"॥

इति । देवलोकाद् गङ्गा पशुपतेः शिरःप्राप, ततः हिमाचलशिखरे अवातरत् । ततः भूमौ प्रावहत् । अन्ते समुद्रं आजगाम । इत्थं भगवता अत्युन्नतस्थाने निवेशिताऽपि गङ्गा अधोगतिमभिलषन्ती पातालमेव जगाम । अविवेकानां नृणां इत्थं अनेकविधः विनिपातः भवति इत्यत्रेदमेव निदर्शनम् । किन्तु अयं गङ्गावतारः भगवतः वक्षःस्थले हाररूपेण समर्पितः माघकविना । तत्राभूतोपमया माघकविः सूक्ति आस्वादयत्यस्मान् —

"उभौ यदि व्योम्नि पृथक् पतेतां,
आकाशगङ्गा पयसः प्रवाहौ ।
तेनोपमीयेत तमालनीलं,
आमुक्तमुक्तालतमस्य वक्षः" ॥

इति । नीलं नभः भगवतः श्रीकृष्णस्य वक्षःस्थलमपि नीलमेव । यदि एकः आकाशगङ्गाप्रवाहः द्विधा भूत्मा देवलोकात् उभाभ्यां धाराभ्यां भूमौ अवतरेत् सः मुक्ताहारमण्डितस्य वक्षस्थलस्य उपमानतां भजेत इति ।

श्रीरामानुजाचार्यस्य प्रियशिष्यः कूरेशकविः । तस्य कांचीनगर्यां विराजमानस्य देवराजस्य चरणयोः ज्यापसी भक्तिः । तत्परीवाहरूपं वरदराजस्तव शताधिकश्लोकं चकार । तत्र भगवत्पादस्य गङ्गावतारेण माहात्म्यमातन्यते । "विष्णुवामपदांगुष्ठनखस्रोतो विनिःसृते । तद्भक्तिविघ्नरूपा त्वं गङ्गे मां मोचयैनसः" इति खलु महान्तः गङ्गां प्रार्थयन्ते । तथाविधा गङ्गा बहुभिः शाखाभिः त्रिलोकीं पुनाति खलु । षष्ठि सगरकुमारान् उदधीधरच्च स्वतीर्थक्लिन्नभस्मीभूतकायशेषान् । वस्तुतः अस्मदुद्दिधीर्षया भगवतो दयैव आपातालमवतरतीति कूरेशः अनुगृह्णाति हे देवाधिराज ! —

"त्वत्पादाब्जे प्रजाता सुरसरिदभवत् प्राक्चतुर्धा तत स्तासु,
एकां धत्ते ध्रुवः सा त्रिभुवनमपुनात्त्रीन्पथो भावयन्ती ।
ततैका खं व्रजन्ती शिवयति तु शिवं सा पुनः सप्तधाऽभूत्,
तास्वेकां गा म्पुनाना वरद! सगरजस्वर्गसर्गं चकार" ॥

हे वरद! यदा महाबलिनिबर्हणाय त्वं पद्भ्यां त्रींल्लोकान् व्याक्रमथाः, तदा सत्यलोकस्थः चतुर्मुखः स्वेन यज्ञदानतपःप्रभृतिधर्मैर्राजितपुण्यजातं स्वघटीमध्ये तीर्थरूपं सम्पाद्य त्वत्पादपद्मं अर्घ्यपाद्यपूजया न्यषिञ्चत् । तदात्वे त्वत्पादाब्जात् प्रभूता गङ्गा चतुर्धा विभक्तधारा समभवत् । तास्वेकां सुरलोकपावनीं धारां तारागणमध्यमलंकुर्वन् ध्रुवो धरति । भगीरथप्रयत्नेन अपरा धारा भूलोकमाक्रममाणा भवेन निरुद्धप्रवाहा स्वशिरोजटामण्डलमध्यास्य तं शिवं अन्वर्थनामानं करोति । "पावनार्थं जटामध्ये दधार शिरसा हारः" इति वचनात् । अतः एव "भवाङ्गपतितं तोयं पवित्रमिति पस्पृशुः" रामलक्ष्मणविश्वामित्राः इति वाल्मीकिः आह ।

इयं तृतीया धारा शिवशिरसः च्युता हिमवति प्रापतत् । इयमेव अलकनंदा नाम्ना बदरीनाथस्य पादच्छायायां परिक्रममाणा सप्तधा विभिन्नप्रवाहा पञ्चप्रयागसंमिलिता हरिद्वारमागच्छति । इयमेव —

"नन्दिनी नलिनी सीता मालती च मलापहा ।
भागीरथी भोगवती जाह्नवी सप्तधा स्मृता" ॥

पूर्वजैः । चतुर्थी धारा पाताललोकं गच्छन्ती कपिलकोपाग्निदग्धदेहान् सगरपुत्रान् षष्ठि सहस्रमपि स्वर्गतान् व्यदधादिति हरिपादप्रभवावतारविभवः वर्णितः ।

कवितार्किकमृगेन्द्रबिरुदभूषितः वेङ्कटनाथार्योऽपि देहळी क्षेत्रे पण्णानदीतटे विराजमानमूर्तिं त्रिविक्रमं अभिष्टुवन् एकेन श्लोकेन गङ्गां सत्यलोकाद्भूलोकान्तं अवतरन्तीं अभिष्टौति ।

"त्रिक्रान्ति केतुपटिका पदवाहिनी ते,
न्यञ्चन्त्युपैति नतजीवितशिशुमारम् ।
औत्तानपादि ममृतांशुमशीतभानुं,
हेमाचलं पशुपतिं हिमवन्तमुर्वीम् ॥ इति ।

अत्र नतजीवितेति भगवन्तं संबोधयति । नमु प्रह्वीभावे । प्रह्वीभूताः शरणागताः अत्र भ्रष्टैश्वर्याः इन्द्रादयो देवाः तेषां रक्षणार्थं किल सः असुरान् पराक्रमेण प्रतारणेन वा निहन्ति । पदात् प्रवहन्ती गङ्गाऽत्र पदवाहिनी । त्रिविक्रमस्य विक्रमणकाले ऋक्षवरः जाम्बवान् भेरीं नादयन् भगवतः विजयमुद्घोषयन् त्रींल्लोकान् प्रदक्षिणं परिचक्रमे । तदिव इयं गङ्गा भगवद्विक्रम-जयचिह्नभूता पाददण्डे बद्धा केतुपटवत् सत्यलोकात् सुवर्लोकावधि प्रसृताऽभवत् । कविर्दण्डी च दशकुमारचरितमंगळश्लोके "क्षरद मरसरित्पट्टिका केतुदण्डः" इति त्रिविक्रमांघ्रिदण्डत्वेन तत्र विबुधसरितं केतुपटत्वेन च न्यरूपयत् ।

एवं अधोमुखं प्रवहन्ती गंगा सकलनक्षत्रग्रहताराऽधिष्ठातारं शिशुमारं भगवन्तं आजगाम । कर्कटिः शिशुमारः । तदाकारो भगवान् पादभूतैः षड्भिः ऋतुभिः उत्तरायणदक्षिणायनस्थेन पार्श्वद्वयेन सूर्यचन्द्राभ्यां चतुर्भ्यां अन्तरिक्षमार्गमालंब्य कालचक्रं ज्योतिश्चक्रं च अधितिष्ठति इति पौराणिकाः । छान्दोग्ये च "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादिभिः सर्वदिव्यज्योतिर्गणानां विधृतिः भगवतः अक्षरशब्दवाच्यस्य सङ्कल्पाधीनेत्याह ।

अनन्तरं किञ्चिदवतरन्तीयं सुरसरित् उत्तानपादतनूजं ध्रुवं अवाप, ध्रुवात् चन्द्रलोकं, ततः सूर्यलोकं ततश्च सुमेरु-कटकस्थानं अवरुह्य पशुपतिजटाकुण्डे भ्रमिभंगीमनुभूय हिमाचलमूर्धनि च शिवमूर्ध्नि पतित्वा भूमिं प्राप्तवतीति दर्शितश्लोके गंगावतारः विव्रियते ।

अत्र नतजीवितस्य वैद्यस्य नारायणस्य जाह्नवीतोयं औषध-मिवास्माकमाधिव्याधिहरणार्थं भारतभूमौ प्रसृतम् । "शरीरे झर्झरीभूते व्याधिग्रस्ते कलेबरे । औषधं जाह्नवीतोयं वैद्यो नारायणो हरिः" इति प्राञ्चः ध्यायन्तः औषधं पिबन्ति । इत्थं बह्वीभिर्धाराभिः पवित्रितत्रिलोकी गंगा पातालमवतीर्य सगरपुत्रानप्युद्धृत्य स्वर्गमारोपयामासेति कूरनाथः "सगरजस्वर्ग-सर्गं चकारेति" श्लोकं पूरयामास ।

अध्वश्रमेणातपघर्मेण च परिक्लान्तः पान्थः यदृच्छया गंगायां अवतीर्य स्नायाच्चेत् आयासेन सह पापमपि गंगा तस्यापा-परोति । एवं भगवतः दयायाः अपवर्गान्तफलप्रदानविभवं अजानन् तामाश्रितवतः शरणागतस्य चेतनस्य भगवत दया संसा-राध्वसंचरणधर्मपीडां व्यपोह्य शाश्वतीं निर्वृतिमपि ददाति । अतः सुरसिन्धुरिव निम्नेऽपि जने सावतीर्य रक्षतीति वेङ्कटेश्वरो वेदान्ताचार्यः इत्थं पद्यं निबध्य गंगया दयां तुलयति ।

निगमसमाश्रिता निखिललोकसमृद्धिकरी,
वृषगिरिनाथपादपरिरम्भवती भवती ।
अविदितवैभवाऽपि सुरसिन्धुरिवातनुते,
सकृदवगाहमानं अपतापं अपापमपि ॥ इति ।

गंगा वेदोक्तकर्मानुष्ठातुः चतुर्मुखस्य धर्मसारभूतेति निगमसमा-श्रिता । जगत्सृष्टिप्रकरणेषु दयादिसमस्तकल्याणगुणाकरत्वेन

उपनिषत्सु ब्रह्मस्वरूपकीर्तनात् दयापि निगमसमाश्रिता। गंगा तीर्थैः प्रावहैश्च भारतभूमिः सस्यसमृद्धिमती। दयया सर्वशक्त भगवान् आश्रितान् सर्वैः फलैः संवर्धयति। अतः उभयो सकललोकसमृद्धिकरत्वम्। दया लक्ष्म्यात्मना मूर्तीभूय भगव त्पादं हस्तपद्माभ्यां संवहति। अथवा भगवच्चरणौ शरणागतस्य दयाकार्यं रक्षणं निश्चितमिति गंगावत् दया पादाश्रिता। इत्थ गंगासाम्यं दयायाः सुसंगतमेव।

एवंविधकविवाक्प्रवाहेषु गंगाप्रवाहोऽप्यवतरति। अतः तेषां वाचि सुधासिक्ता सूक्तिः मनुव्यासप्राचेतसप्रभृतिमहर्षि-परिषत्सु सम्माननार्हा भगवदनुग्रहवशादागच्छति। तत्रापि गंगा-वतारः एव निदर्शनम्। पंगुः कश्चन परमगंगामातृभक्तः कुम्भ-मासे पौर्णिमायां प्रयागस्नानाय गतवान् दक्षिणादुत्तरं भारतम्। किन्तु पंगुतया तत्र प्राप्तुं न शशाक। दयया तस्य शिरसि गंगामाता स्वयमेव पतित्वा वात्सल्येन तन्मनोरथं पूरयेद्यदि कोऽयं तां निरोद्धुं प्रभवेत्? इदमाह वेदान्तगुरुः कविः --

मनुव्यासप्राचेतसपरिषदर्हा क्वचिदियं,
सुधासिक्ता सूक्तिः स्वयमुदयमन्विच्छति जने।
निरुन्ध्येक्तो विन्ध्याविकटसन्ध्यानटजटा -
परिभ्रान्ता पङ्कोरुपरि यदि गंगा निपतति॥

अतः देववाणी देवगंगा च संगम्य इदानीं मदुक्तिच्छलेन अस्माकं पत्रिकायामपि रसमास्वादयन्ती विहरतु तदुभयप्रेमिणां मनीषिणां मानसाब्जे, इति शम्।

# भोजसभा

— कंदाळ वेङ्कटरामकृष्णमाचार्यः, तिरुपति

मयूरः-स्वस्ति महाराज! बहवस्सन्ति विशेषाः श्रूयतां!

पन्थास्संहर दीर्घतां! त्यज निजं तेजः कठोरं रवे!
श्रीमन्विन्ध्यगिरे! प्रसीद! सदयं सद्यस्समीपे भव!
इत्थं दूरपलायनश्रमवतीं दृष्ट्वा निजप्रेयसीं
श्रीमन्भोज! तव द्विषः प्रतिदिनं जल्पन्ति मूर्छन्ति च ॥

(उपविशति)

भोजः-साधु! मयूरकवे! साधु! अतिशयोक्तिमेव अतिशेते भवदुक्तिः ।

वर – (उत्थाय) मदीयामपि विज्ञापनां शृणोतु महाराजः ।

दृष्टे श्रीभोजराजेन्द्रे गलन्ति त्रीणि तत्क्षणात् ।
शत्रोश्शस्त्रं कवेः कष्टं नीवीबन्धो मृगीदृशाम् ॥

(उपविशति)

भोजः-साधु! वररुचे! साधु! पण्डितकविरसि!

दण्डी-(उत्थाय) एना मप्यवधारयतु महाराजः!

समुन्नतघनस्तनस्तबकचुम्बितुम्बीफल –
क्वणन्मधुरवीणया विबुधलोकलोलभ्रुवा ।
त्वदीयमुपगीयते हरकिरीटकोटिस्फुरत् –
तुषारकरकन्दळीकिरणपूरगौरं यशः ॥

(उपविशति)

भोज -अहो महती पदपद्धतिः (दण्डिनो मुखमालोक्य) सुललित-पदबन्धचातुरीनिपुण! गद्यप्रबन्धरचनाधौरेय! महाकवे! दण्डिन्! नितरां श्लाघनीयोऽसि ।

(बाणः सहसा प्रविशति)

बाणः–इह निवसति मेरुश्शेखरो भूधराणां
इह हि निहितभारा स्सागरा स्सप्त चैव ।
इदमतुल मनन्तं भूतलं भूरिभूतो –
द्भवधरणसमर्थं स्थानं अस्मद्विधानाम् ॥

भोजः–(उत्थाय) स्वागतं बाणमहाकवये! इद मासन मलंक्रियताम्! (आसनं दर्शयति । बाणः उपविशति । अनन्तरं भोजः बुद्धसागराभिमुखो भूत्वा) भो महामात्य बुद्धिसागर! अद्य खलु रात्रौ मया स्वप्ने तृतीये यामे मदीया सभा नवरत्नमण्डिता दृष्टा! !

बुद्धि– महाराज! निशावसानसमयदृष्टाः स्वप्नाः अवितथफला भवन्तीति आर्योक्तिः श्रूयते! अतः अवश्यं अद्य वा श्वो वा तत् सफलीभविष्यति इति मन्ये ।

४कव–तथास्तु! ! (प्रतीहारी प्रविशति)

प्रती– (देव) आर्य! कोऽपि शंकरनामा कविः द्वारि तिष्ठति!

भोजः–त्वरितं प्रवेशय। (प्रतीहारी निष्क्रान्तः! शंकरः प्रविशति)

शंकरः-राजन् अभ्युदयोस्तु!

भोजः–शंकरकवे किं पत्रिकाया मिदम्?

शंकरः-पद्यम् ;

भोजः–कस्य?

शंकरः-तवैव भोजनृपते!

भोजः–पापठ्यताम्!

शंकरः–पठ्यते!

एतासामरविन्दसुन्दरदृशां द्राक् चामरान्दोलनात् ।
उद्वेल्लद्भुजवल्लिकङ्कणझणत्कारः क्षणं वार्यताम् ॥

(भोजः वारयति)

(दृष्ट्वा पठति)

यदा यदा भोजयशो विवर्धते,
सितां त्रिलोकी मिव कर्तु मुद्यतम् ।
तदा तदा मे हृदयं विदूयते,
प्रियालकालीधवळत्वशंकया ।।

(उपविशति)

भोजः–साधु! शंकरकवे! साधु! समुज्ज्वलकविताप्रवाहेन श्लाघनीयोऽसि! (बुद्धिसागराभिमुखो भूत्वा) अमात्यशेखर! अस्मै द्वादशलक्षं दीयताम् (बुद्धिसागरः ददाति) महाकवे! भवान् ममास्थानं अलंकरोतु ।

शंकरः-तथा, अनुगृहीतोऽस्मि (प्रविशति प्रतीहारी)

प्रती– देव! कनकमयकुण्डलशाली, दिव्यांशुकप्रावरणः कश्चन विद्वान् द्वारि तिष्ठति!

बुद्धि– सद्य एव परिपूर्णमनोरथो भवति देवः!

भोजः–त्वरितं प्रवेशय (प्रतीहारी निष्क्रान्तः। कालिदासः प्रविशति)

बुद्धिः–(कालिदासं दृष्ट्वा भोजभूपालमुद्दिश्य) देव! कनकमय-कुण्डलधारी, दिव्यांशुकप्रावरणो, नृपकुमार इव मृगमदपंक-

कलंकितगात्रो, नवकुसुमसमभ्यर्चितशिराः, चन्दनाङ्ग-
रागेण विलोभयन् विलास इव मूर्तिमान्, कवितेव तनु-
माश्रितः, शृङ्गाररसस्य स्यन्द इव सस्पन्दो महेन्द्र इव
महीवलयं प्राप्तः विद्वान् शोभते!

भोजः–तथैव महापुरुष इवाभाति (उत्थाय, काळिदासाभिमुखो
भूत्वा) महापुरुष! स्वागतम्! –आगम्यताम्!–आस्यतां
अस्मिन्! (इति समीपे उपवेशयति)

काळिः-(उत्थाय) धारानगराधीश! भोजमहाराज! स्वस्ति
भवतु ते!

महाराज श्रीमन्! जगति यशसा ते धवळिते,
पयः पारावारं परमपुरुषोयं मृगयते ।
कपर्दी कैलासं, करिवरमभौमं कुलिशभृत्,
कळानाथं राहुः, कमलभवनो हंस मधुना ॥
(उपविशति)

भोजः–विप्र! भवन्नाम्ना कान्यक्षराणि सौभाग्यावलंबितानि!
कस्य वा देशस्य भवद्विरहः सुजनान् बाधते?

काळिः-नामग्रहणं नोचितं पण्डितानाम्! हस्ते विलिख्य सूच-
यिष्यामि । (काळिदास इति हस्ते विलिख्य सूचयति!
भोजः! वाचयति)

भोजः–(पठति) काळिदासः!! (आश्चर्यचकितस्सन्) महाकवे!
काळिदास! भवदागमनेन वयं अस्मत्सभा च नितरा-
मनुगृहीताः । सम्पूर्णाश्च सुचिरादस्माकं मनोरथाः । अह-
मभ्यर्थये यत् अद्यारभ्य आस्थानकविपदं अधिष्ठितुम्!
अनुगृह्णन्तु अनुकूलवचोदानेन! (इति तांबूलं ददाति)

[अनुवर्तते]

# श्रीकामकोटिपीठाधिपानामागमनम्

ज्येष्ठबहुलदशम्यां भौमवासरे (२२-६-७६) श्रीजगद्गुरु काञ्चीकामकोटिपीठाधिपाः श्री श्री श्री जयेन्द्रसरस्वतीस्वामिनः तिरुपतिनगरात् चित्पुरीं (चित्तूरु) प्रात प्रातः सार्धषष्ठघण्टाकाले आगतवन्तः। बहवः पौराः पूर्णकुम्भफलपुष्पादिना प्रत्युत्थितवन्तः। वाद्यमानेषु मङ्गलवाद्येषु, प्रतिनदत्सु वेदमन्त्रेषु प्रतिगृहं दीयमानानि पूर्णकुम्भसपर्यादीनि समन्दहासं स्वीकुर्वन्तः, मन्दं मन्दं मुख्यवीथीनां द्वारा सोत्साहमुत्सवरूपेण, द्रष्टॄणां नेत्रोत्सवं जनयन्तः श्रीचेट्लूरु वेङ्कटरमणार्यस्य गृहं प्राविशन्।

ततस्तत्र सुखोपविष्टेषु स्वामिषु, भक्तबृन्दे साञ्जलिबन्धमुपस्थिते, संस्कृतभाषाप्रचारिण्याः सभायाः कार्यदर्शी नागपूडि रामनाथार्यः संस्कृतं स्वागतपत्रमपठत्, यस्यान्ध्रानुवादः के. सि. जयचन्द्रशास्त्रिणा (सभायाः मानेजर्) कृतः। ततः स्वामिभिः त्रिकालपूजा यथाविधि परिसमाप्य स्वपाणिपल्लवेन विपल्लूनिनिपुणतीर्थप्रसादादिकं अशेषभक्तेभ्यः वितीर्णम्।

सायं सार्धचतुष्टयघण्टासमये सभ्यानामभ्यर्थनामङ्गीकृत्य सं. भा. प्र. सभां दर्शितवन्तः। यत्र सभाप्रधानमन्त्री श्रीमान् ब. शेषाचार्यः सभाकार्यक्रमान्, परीक्षाणां विधानं, गैर्वाणीपत्रिकाप्रकटनपरिपाटीं विवृण्वन्, पुस्तकभाण्डागारं निर्मीयमाणसभाभागं च प्रादर्शयत्। सभाप्रकाशमन्त्री श्रीभूनिरोड्डुः सभानिर्माण-

परिपूर्त्यै आर्थिकं साह्यमपि अभ्यर्थयामास । श्रीमन्तः स्वामिनः सभाकार्यक्रमसंदर्शनसंजातानन्दतरङ्गितान्तरङ्गा अभवन् ।

ततः श्रीकोदण्डरामालयं, अगस्तीश्वरालयं, आञ्जनेयालयं च गतवन्तः । श्रीरामविलाससभामपि व्यलोक्य पुनर्वसति-भवनमागत्य सांध्यविधिं निर्वर्त्य, रात्रावष्टघण्टासमये रायवेलूरुं प्रति प्रस्थितवन्तः ।

पौरा अनेके सुदूरमनुगम्य, श्रीमतामाज्ञया कृच्छ्रेण प्रति-निवृत्ता आसन् ।

---

**भक्तिप्रियः केशवः —**

आखेटाय वनं गतोऽतिगहनं व्याधश्चराख्यः पुरा,
श्रीकृष्णं यदुनन्दनं तरुतले ध्यानादृतं बाणतः ।
हत्वा भ्रान्तियुतस्ततो नु शरणं गत्वाऽऽप मुक्तिं यतः,
हेतु र्नाचरणं पुनर्भगवतो विष्णोः कृपालब्धये ।।

पित्रङ्के निजसोदरं सुरुचिजं दृष्ट्वाऽऽसितुं बालकः,
गत्वा तत्र तिरस्कृतोऽपि विपिनं प्राप्य ध्रुवस्तप्तवान् ।
श्रीविष्णोः करुणामवाप्य सुमहत्स्थानं च लेभे ध्रुवम्,
तस्मादत्र च कारणं नहि वयः विष्णोः कृपालब्धये ।।

---

# ★ सुभाषितानि ★

— श्री एन्. रामनाथार्यः

विवादो धनसम्बन्धः याचनं स्त्रीषु सङ्गतिः ।
आदानमग्रतः स्थानं मैत्रीभंगस्य हेतवः ॥ ॥ ६१० ॥

Disputes arising out of monetary affairs, begging, familiarity with women, borrowing, superior position, these are the causes for disruption of friendships.

दुःखेन श्लिष्यते भिन्नं श्लिष्टं दुःखेन भिद्यते ।
भिन्नश्लिष्टा तु या प्रीतिः सा दुःखैकप्रदायिनी ॥ ६११ ॥

That wich is broken is joined with great difficulty; that which is unbroken is sundered with great difficulty. Broken love which is patched up results in unhappiness.

गुणा धनेन लभ्यन्ते न गुणैर्लभ्यते धनम् ।
धनी गुणवतां सेव्यः गुणी न धनिनां क्वचित् ॥ ६१२ ॥

A rich man passes for a person endowed with good qualities: a person with good qualities suffers for want of money. A rich man is served by a good person but a good person is never honoured by a rich man

गुरोरप्यवलित्पस्य कर्याकार्यमजानतः ।
उत्पथं प्रतिपन्नस्य कार्यं भवति शासनम् ॥ ॥ ६१३ ॥

Even elders are liable to correction and criticism, when they are conceited and trangress the rightful conduct and do not discriminate between the good and bad actions.

विक्लबो वीर्यहीनो यः सदेव मनुवर्तते ।
वीराः सम्भावितात्मानः न दैवं पर्युपासते ॥ ॥ ६१४ ॥

Persons who are timid and cowardly submit to Fate. Brave and self possessed do not depend on Fate

दैवं पुरूषकारेण यः समर्थः प्रबाधितुम् ।
न दैवेन विपन्नार्थः पुरूषस्सोवसीदति ॥ ॥ ६१५ ॥

One who can overcome Fate dy self exertion will not feel depressed overcome by Fate

शोको नाशयते धैर्यं शोको नाशयते श्रुतम् ।
शोको नाशयते सर्वं नास्ति शोकसमोःरिपुः ॥ ॥ ६१६ ॥

Grief destroys courage, spoils learning and retards all good things. There is no enemy equal to grief.

# श्रीसहस्र भागवतसप्ताहज्ञानयज्ञः

## अष्टोत्तरशतकुण्डस्वाध्यायज्ञानयज्ञश्च

★ —आसूरु वरदराजः, चिसूरु

### स्थलकालनिर्वहणादिकम्

श्रीत्रिदण्डिश्रीमन्नारायणरामानुजजीयर्स्वामिनां महता सङ्कल्पेन मङ्गलाशासनैश्च साकं आन्ध्रप्रदेशराज्यपालानां माननीय श्रीमोहनलाल सुखाडिया महोदयानां उद्घाटनोत्सवेन च सह १-६-७६ दिनादारभ्य ८-६-७६ दिनपर्यन्तं हैदराबाद्-नगरे प्रदर्शनस्थले (एग्जिबिषन् ग्रौंड्स्) सप्ताहपारायणविधि-प्रकारेण श्रीव्यासमरचितसंस्कृतभागवतसहस्रपारायणानि, १०८ अष्टोत्तरशतकुण्डस्वाध्यायज्ञानयज्ञहवनानि, तेलुगुभाषायां हिन्दी-भाषायां च उपन्यासाः अन्ते रुक्मिणीकल्याणमहोत्सवश्चेत्यादिकं महता समारोहेण सुसम्पन्नम् ।

### कार्यक्रमबाहुल्यम्

अस्मिन् सहस्रभागवतसप्ताहज्ञानयज्ञे श्रीमद्भागवतपारा-यणपराणां ऋत्विजां च वरणं, चार्मीनार्प्रदेशात् श्रीरुक्मिणी-समेतश्रीकृष्णपरमात्मनः श्रीमद्भागवतमहाग्रन्थस्य च गजो-त्सवः, यज्ञशालाचार्यवरणं, अंकुरार्पणं, वास्तुशान्तिः, दीक्षाधारणं, अग्निमथनं, चतुर्वेदपारायणं, हवनं, नित्यपूर्णाहुतिः, शान्तिपाठः श्रीमहालक्ष्मीपूजा, दिव्यप्रबन्धाध्ययनं, गोपूजा, श्रीविष्णुसहस्र-नामार्चनं, हरिनामसङ्कीर्तनं, श्रीतुलसीरामायणपारायणं, भगवतः तिरुवीध्युत्सवः इत्यादिकं बहुमुख कार्यक्रमवैविध्यमपि सम्मिलित-मासीत् ।

**विशेषांशाः**

सुविशाले प्रदर्शनस्थले यज्ञमण्टपः, पारायणमण्टपः भगवन्मण्टपः, उपन्यासमण्टपः, भजननामसङ्कीर्तनमण्टपः, भोजनशालामण्टपाः, कार्यनिर्वाहकमण्टपः, श्रीजियर्स्वामिनां निवासमण्टपः इत्यादीनां तत्तद्वासस्थलानां विद्युदीकरण - पानीयनालिकासंयोजादिसौकर्येण साकं निर्माणं कृत मभूत् ।

समागतानां पारायणपराणां ऋत्विजां च निवासः समीपतरवर्तिनि वनिताविद्यालये, रामप्रताभवने (मार्वाडिधर्मशालायां) च परिकल्पितः। आहारवस्तुसामग्रीस्थापन - शोधन - वितरणादि कार्यार्थं वनिताविद्यालयस्य त्रिचतुरेषु सुविशालेष्वपवरकेषु प्रबन्धः कारितः ।

श्रीवैष्णवानां, स्मार्तमाध्वानां, उत्तरदेशादागतानां ब्राह्मणानां च कृते पृथक् पृथक् भोजनशालाः परिकल्पिताः, यत्र प्रत्यहं द्विसहस्राधिकानां भागवतानां तदीयाराधनं – सन्तर्पणं – समाराधनं (भोजनसौकर्यं) सम्पाद्यमानं चाऽसीत् ।

अस्मिन् महत्यध्वरे आहूतानां अनाहूतानां च भागवतानां महान् समवायोऽजायत। आहूतानां समेषामपि प्रकटितयज्ञसंभावना, दक्षिणा, यातायातव्ययसहिता समर्पिता । अनाहूतानामपि यज्ञभागिनां यावच्छक्यं दक्षिणादानं, व्ययप्रदानं च कृतम् । सर्वेऽपि यज्ञभागिनः पारायणपराःऋत्विजश्च दीक्षावस्त्रैः, श्रीकोशैः, श्रीरुक्मिणीसमेतकृष्णपरमात्मनः विग्रहैः, लक्ष्मीनारायणयन्त्रैः जिय्यर्स्वामिचित्रपटैः, तुलसिमालिकाभिः श्रीजिय्यर्स्वामिनां मङ्गलाशासनपत्रिकाभिश्च बहूकृताः ।

यज्ञान्ते, पूर्णाहुतिसमापनानन्तरं अवबृथोत्सवसमये वरुण-भगवत्कृपया वर्षपातस्समजनि, प्रशान्तं च भूमण्डलम्। "यज्ञस्समाप्तः; देवोऽमृत ववर्ष"।

अस्मिन् सहस्रभागवतसप्ताहमहासङ्कल्पे, श्रीजिय्यर् स्वामिनां साह्यविधाने सहकृतवतां नारायणभट्ल कृष्णमूर्तिशास्त्रि-महोदयप्रभृतीनां विदुषां सहयोगेन, आह्वानसङ्घसभ्यानां, आहार-सामग्रीप्रभृतितत्तदावश्यकद्रव्यभूरिवितरणेन यज्ञकार्यसम्पादकानां मार्वाडिव्यापारिदानशौण्डानां अन्येषां च विविधदातृवर्गाणां औदार्येण, दिने दिने प्रवर्तमानेष् कार्येषु यथोक्तविधिना सेवाभावं - कैङ्कर्यं - निर्वर्तयतः उद्योगिवर्गस्य निर्विरामसेवया च यज्ञभगवान् सर्वात्मना सुप्रीतः सुप्रसन्नो वरदोऽभवदिति नैव संशयः।

लोककल्याणार्थं आयोजितेऽस्मिन् महायज्ञे महतां सत्संकल्पः, विदुषां सभक्तिश्रद्धं सहभागित्वं, उदारचित्तानां भूरिभूरि वितरणं, सर्वकारस्य स्थानिकप्रमुखानां च आनुकूल्यप्रकल्पनं, भक्तिश्रद्धा-प्लुतानां समेषां स्त्रीपुरुषभक्तानां आगमनसन्दर्शनसमर्पणादिकं इत्यादि सर्वमपि पूर्णाहुतिविधानेन उपयुक्तमासीदिति मन्यामहे।

सर्वात्मको भगवान् सर्वविधैः चेतनाचेतनात्मकैः निज कैङ्कर्योपकरणैः निजमुखोल्लासाय काले काले लोकोद्धरणाय एवम्भूतान् यज्ञविशेषान् प्रकल्पयतु, श्रीजिय्यर्स्वामिनश्च एवम्भूतैः लोककल्याणकार्यक्रमैः आयुरारोग्यकैङ्कर्यभाग्यैः स्समेधन्तां इति आशास्महे।

गतमासगैर्वाण्यां प्रदत्तायाः समस्यायाः

## पूरणम्

गभीरसागरोत्पन्नः शिवचूडाविभूषणम् ।
तारासङ्गमदोषेण, सकलङ्को हि चन्द्रमाः ॥

— के. सि. जयचन्द्रशास्त्री, चित्तूरु

निमीलनं हि पद्मानां वीक्ष्य कोपात् शिलीमुखैः ।
बिम्बं कलंकितं, तेन सकलङ्को हि चन्द्रमाः ॥

— मेडवरपु संपत्कुमार्, मण्डपेट

केशपाशनिशाव्याप्तमधरामृतसंवृतम् ।
प्रियामुखमहं प्रेक्षे, सकलङ्को हि चन्द्रमाः ॥

— पि. एम्. पद्मनाभशर्मा, तञ्जावूर्

तरुण्यच्छमुखच्छायातौल्यं भजति पङ्कजम् ।
न तु चन्द्रः सखे नूनं सकलङ्को हि चन्द्रमाः ॥

— ना. व. निगमान्तः, प्रोद्दुटूरु.

चन्द्रमा मनसो जातो मनो हि सकलंकरम् ।
पुष्णाति चौषधीन्सर्वाः, सकलङ्को हि चन्द्रमाः ॥

— या. वि. देवासकरः, बरोडा

लोकापवादसंभीतः रामस्तत्याज जानकीम् ।
अग्निपूतां सतीं भार्यां सकलंको हि चन्द्रमाः ।

**बालगणपतिभट्टः, श्रीरङ्गपत्तनम्**

सद्धर्मोऽग्निर्जलं लोके सफेनं रसवत्फलम् ।
सबीजं समदं चित्तं सकलङ्को हि चन्द्रमाः ॥

**— आर्. गोपालन्ः, चित्तूरु**

सुधांशुर्द्विजराजोऽपि कलानिधि रपि स्फुटम् ।
गुरुदाराभिसंबन्धा त्सकलङ्को हि चन्द्रमाः ॥

**गलगलि रामाचार्य, बेलगाम्**

---

## अन्योक्तिविलासः

**सूर्यान्योक्तिः —**

पूर्वं समुद्रपतितोपि सुमज्जितोऽपि,
पारङ्गतः कथमपि स्वबलेन पश्चात् ।
उत्तुङ्गशृङ्गमधिरुह्य तमांसि भेत्ति,
कर्तव्यकर्म न जहाति सुधीः कदापि ॥

गाढान्धकारपरिपन्थिकुलं विभेद्य
प्रातः प्रबोध्य वदनानि च पद्मिनीनाम् ।
पीत्वा महोदधिजलं किल मध्यमेऽह्नि,
सायं परिव्रजति नेत्रपथात्सुदूरम् ॥

# गान्धीकथा

बालगणपतिभट्टः, श्रीरङ्गपत्तनम् ।

उपनिषदुद्घोषयति "अन्नं ब्रह्मेति व्यजानात् । अन्नं हि भूतानां ज्येष्ठम् । अन्नाद्भूतानि जायन्ते । जातान्यन्नेन वर्धन्ते" इति ।

अन्नं तावद् ब्रह्म । भक्त्या श्रद्धया च तस्योपासना सर्वैरपि विधातव्या । सर्वस्यापि जीवराशेरनुकूलिन अन्नस्यावज्ञा न कदापि केनापि कर्तव्या । तस्योपयोगोऽपि योग्यरीत्यैवावश्यं भवितव्यम् ।

जगद्धितसाधकस्य महात्मनः गान्धीमहाभागस्य विचारः "अन्नमपि न त्याज" इति अधोनिर्दिष्टेन प्रसङ्गेन स्पष्टं भवति ।

१९३० क्रिस्तवीयः वर्षः । संवत्सरेऽस्मिन्नेव महात्मनः विश्वविख्यातः" दण्डि सत्याग्रहः प्राचलत् । अशीतिसंख्याकैः स्वयंसेवकैस्सह सत्याग्रहयात्रा प्रारम्भत । आंग्लशासकनेत्रकण्टकायिता सा यात्रा महती राष्ट्रव्यापि न्यभवत् ।

भगवता कर्त्रा दत्तेनोदधिजलेन जगच्छक्षुषः कर्मसाक्षिणः सूर्यदेवस्य साह्येन नित्यावश्यकलवणनिर्माणस्य निरोधे आहोस्वित् तस्योद्यमे करविधानं वा सर्वथाऽसाधु इति महात्मन आशय युक्त आसीत् ।

अमुं महोत्सवं द्रष्टुं न केवलं भारतीया जना अपितु विदेशीयाः देशीयाः पत्रकाराश्च तत्रोपस्थिता बभूवुः ।

ऋतुर्ग्रीष्मः । महान् ताप उष्णरश्मेः । नद्यास्तीरे सैकते देशे कर्कटी - वृत्तकर्कटी - मधुरकर्कटयादयः लतासु विराजन्ते स्म ।

एकस्मिन् खेटके महात्मा मध्ययात्रायां दिने चैकस्मिन् तस्थौ । तत्रत्याः कृषीवलाः महात्मनः तत्सहयात्रिकाणाञ्च कृते उपहारार्थं शकटेषु स्वोत्पादितानि मधुराणि फलान्यानयामासुः । उदरपूर्णं भक्षितेऽपि बहूनि फलान्यवशिष्टान्यभवन् कानिचन विगलितानि कानिचन नष्टानि । एतत् दुर्दृश्यं विलोकितस्य महात्मनो मनः नितरामार्तोऽभवत् ।

सन्ध्यायां यथावत् आयोजिता प्रार्थनासभा । उपस्थितान् प्रति गान्धीमहाभागः प्रार्थनासभाव्याख्यानमेव मकरोत् ।

भारतीयानामस्माकमुत्पन्नं प्रतिशिरः केवलं आणकद्वयम् । एवं स्थिते राष्ट्रस्यास्य वैसराय महाभागः प्रतिदिनं सप्तशतरूप्यकाणां वेतनं प्राप्नोति इति सर्वथाऽयुक्तं न्यायदूरञ्च अद्य तस्य निकटेऽमुमेव विषयं विवृण्वन् पत्रं अहं लिखितवान् । रूप्यकेणैकेन भारते अष्टौ जनाः स्वोदरं पूरयितुं समर्थाः । एवं स्थिते प्रायः पञ्चसहस्रजनानां धनमेक एव पुरुषः खादतीति महद्दुःखस्थानम् । एषः अनुचितः व्यवहारः मया पत्रे स्पष्टं उल्लिखितम् ।

अस्तु, अत्र ग्रामे अधुना पश्यन्नस्मि शतशतानां मानवोदरोपयोगिनां फलानां नाशम् । शकटेषु कण्डोलेषु भवद्भिः

ग्रामवासिभिः फलानि अपेक्षाधिकान्यानीतानि। पर्याप्तान्येव फलानि भवेयुर्यदि समीचीनं स्यात्। अत्रत्यं अमुं विनाशं दर्शनेन अनुभवितोऽहं कथं वा वैसरायमहाशयं निन्देयम्। भवतामेतत्कर्म महत्पापकरम्। अनेन दुष्कर्मणा मम प्रतिष्ठैव भ्रष्टा। एतादृशमनर्हंव्ययं न कदापि भविष्ये भवन्तः कुर्वन्तीति विश्वसिमि। एतादृशोनर्थः व्यवहारः अन्नादीना मनुपयोगः भवद्भिः कदापि न भवेत् इति।

महात्मनः अस्य व्याख्यानस्य प्रभावः समेषा मुपर्यपतत्। केचिल्लज्जयाऽवनतशीर्षाः, केचिद्दुःखाश्रुपरिप्लुतवदनाश्चाभूवन्।

## विद्यार्थिनां श्लाघनीयः परीक्षाजयः

श्रीमदहोबिलमठाधीश्वराणां श्रीवण्शठकोपश्रीवीरराघवशठकोपयतीन्द्रमहादेशिकानां, श्रीवण्शठकोप श्रीमद्वेदान्तदेशिकसंयमीन्द्राणां,श्रीकाञ्चीकामकोटिमठाधीशानां श्रीमच्चन्द्रशेखरेन्द्रसरस्वती – श्रीजयेन्द्रसरस्वती श्री चरणानां च परमानुग्रहेण तमिलनाडु सर्वकारीयैः प्रचालितां O. S. L. C. परीक्षां प्रविष्टाः मद्रपुर्यन्तर्गत पश्चिममाम्बलस्थितश्रीमदहोबिलमठीयओरियण्टल् हैस्कूल्विद्यार्थिनः सर्वेपि अस्मिन्नपि संवत्सरे श्लाघार्हं जयं प्राप्तवन्तः इति ससन्तोषं निवेद्यते।

अत्रान्यदप्यस्ति प्रमोदस्थानं यत् एतस्याः पाठशालायाः विद्यार्थिन एव प्रतिसंवत्सरं अन्य ओरियण्टल् हैस्कूल् विद्यार्थिनां मध्ये परीक्षाजयप्राप्तिविषये अनुस्यूततया प्रथमं स्थानमेव प्राप्नुवन्तो वर्तन्त इति।

# हनूमत्प्रातःस्मरणम्

— बालगणपतिभट्टः, श्रीरङ्गपत्तनम् ।

प्रातःस्मरामि पवनात्मजवक्त्रबिम्बं,
कध्योदितोष्णकिरणग्रसनानुरक्तम् ।
बिम्बोष्ठकान्तमरविन्दनिभाक्षियुग्मं,
रक्षः कुलाधिपदशास्यमनःकषायम् ॥ १

प्रातर्भजामि पवनात्मजकान्तकायं,
प्रातर्दिवाकरनिभं दितिजौघभीषम् ।
सीतारघूद्वहमनः परितोषहेतुं,
पार्थध्वजस्थिरणोत्सवदर्शनोत्कम् ॥ २

प्रातर्नमामि पवनात्मजपादपद्मं,
भक्त्या समाश्रितजनार्तिकुलाद्रिवज्रम् ।
दैत्येन्द्रवत्सविनिभेदनपावकास्त्रं,
लङ्कापुरोपवनभञ्जनदक्षभूतम् ॥ ३

प्रातः श्रये पवननन्दनमादरेण,
सुग्रीवदाशरथिसख्यकरं श्रुतिज्ञम् ।
उल्लंघितोरुजलधिं कपिलोकवन्द्यं,
सीतार्तिनाशनचणं रघुरामदूतम् ॥ ४

प्रातर्वदामि पवनात्मजभद्रनाम –
पक्ति मुहुः सकलसाध्वसनाशकर्त्रीम् ।
सुग्रीवमित्ररघुरामचराञ्जनेय,
चेतः प्रसादनकरप्लवगाधिपेति ॥ ५

# स्वाहासुधाकरः

— मेडवरपु संपत्कुमार्, मण्डपेट

ताराशशाङ्कवत् स्वाहासुधाकरो नाम कश्चन प्रबन्धः विद्यते । अयं प्रबन्धः न अतीव प्रचारमाप । अस्य प्रबन्धस्य प्रणेता श्रीनारायणभट्टपादः । केरलदेशे "निला" नामक पुण्य-नद्याः उत्तरे तीरे "मेप्पुन्नूर्" इति विख्याते भूसुरवंशे अयं जातः, बाल्ये अभ्यस्तशास्त्रो न बभूव । ततः कदाचन अच्युत नामकस्य हरिदासस्य शुश्रूषां कृत्वा शास्त्राणि अधीतवान् । नारायणभट्टपादः "गुरुवायुपुरम्" इति प्रसिद्धे क्षेत्रे विद्यमानं नारायणमभजत । अयं कविः १५९० मिते खिस्ताब्दे भाग-वतार्थप्रतिपादनपरं अतिरमणीयपदघटितं नारायणीयनामकं स्तोत्ररत्नं रचितवान् । अद्यापि केरलदेशीयैः एतत्स्तोत्रं अहरहः पर्युपास्यमानं भागवतमिव विजेजीयते ।

अस्मिन् प्रबन्धे रचना मधुरवचनैः परिपोषिता ।

प्रथमतः स्वाहाचन्द्रमसोः, अभिलाषनामकविप्रलंभश्रृंगारः उपवर्णितः । अनन्तरं तयोः श्रृंगारकेलीविलासः अतिमधुरं वर्णितः । एतौ द्वौ अस्य प्रबन्धस्य जीवनाडीभूतौ । कथा यथा — चतुर्मुखः प्रेमातिशयात् वाणीं जिह्वायां दधति । विष्णुः लक्ष्मीं वक्षसि धत्ते । देहार्धे गिरिजां गिरिशः धत्ते । तथैव कामातुरः हव्यभुगपि स्वाहां जठरे निदधाति । एतावानस्ति विशेषः — ब्रह्मादयः वल्लभां सदा दधति । पावकस्तु याममात्रं दधति संध्ययोः द्वयोस्तु न, कदाचित् सन्ध्योपासनकर्मणे स्वाहां

निक्षिप्य पावके गते सति चन्द्रः तामवलोक्य मन्मथशरैः चिरं संतापितात्मा मल्लीचन्दनमन्दमारुतरसेषु निन्दापरस्सन् काञ्चन वासरान् प्रत्येकं अब्दोपमान् अगमयत्। तदनु कदाचन सन्ध्यावेलायां चन्द्रः कुमुदिनीरोहिणीभ्यां अविज्ञातवृत्तान्तो भूत्वा स्वाहया सनाथीकृतं उटजाङ्गणमभिससार। स्वाहयापि रजनीकरे रतिः [illegible] सूचिता — पश्यन्तु,

"रविरयमस्तं यातः समागतो हन्त हन्त चन्द्रोऽयम्।
याति विकासमपीयं कुमुद्वती किं विलम्बसे भृंग" ॥

इत्यनेन। एवं सल्लापितैरुल्लसितमल्लिकायुधविलासयोः परस्परगृहीतआलिङ्गनचुम्बनाडम्बरैः दशननिपातविदलितसकलावयवाः स्वाहाचन्द्रमसोः सुरतोत्सवाः संबभूवुः। ततश्च चौर्यसुरतेन अनुक्षणविजृम्भितविलासयोः कदाचिदप्यपरिपूर्णमनोरथयोः स्वाहाचन्द्रमसोः मदनानलः आज्यधारयेव महानलः क्षणक्षणं समजृम्भत। चन्द्रः स्वाहया प्रतिदिनं अवियोगं कल्पयन् एवं ऊचे। देवि! त्वं सहचरात् पावकात् हृद्यां उदरधारणविद्यां अधीष्व तेन आवां सर्वकालं विहरणं कुर्वहे इति — तदा स्त्रीजनसुलभेन निर्बन्धेन निबध्य स्वाहादेवी सुदुर्लभमपि तां विद्यां जडात्मनो हुताशनात् अधिजगाम। ततः स्वाहादेवी विद्यावशात् निजोदरे शशिधरं संजग्राह तामपि पावकः जग्राह। अनन्तरं गगने रजनीकराभावात् संततं नक्षत्रग्रहगणनां कुर्वतां जनानां मनांसि कलकलाः सञ्जाताः। हा शीतकिरण! क्व गतोऽसि इति तारासमूहैः कृतैः आक्रोशैः सुरकुलं व्याकुलं बभूव। शतमखचतुर्मुखप्रमुखैः अखिलैः सुरैः अस्मदापन्निराकरणप्रवीणः नारायणान्नान्य इति निश्चिन्वानैः देवैः भगवान् विष्णुः

सञ्चिन्तितः। विष्णुः तेषां व्याकुलकारणं बुध्या निध्याय देवान् प्रति एवं बभाषे। हे देवाः! यूयं क्षणं बहिः यात, हुतभुजा संभाषणं कुर्महे, पावकान्तर्गता स्वाहापि अस्माकं वचनं न शृणोतु। इति विष्णुः अवोचत्। अनन्तरं पावकः स्वाहां निक्षिप्य मुरारेः पार्श्वभागं याते सति देवाः स्वाहासमीपं अत्यन्तगूढाः तस्थुः। अनन्तरं स्वाहाऽपि प्रीता भवती समंताद-वलोक्य कोपि नास्ति इति मत्वा दिगम्बरं चन्द्रं गगनपथं यापयामास। तं चन्द्रं दृष्टा देवाः सहस्ततालं परिहसन्तः, अभिमुखा अभवन्। केचित् इन्दुं निन्दन्तः, केचित् स्वाहां निन्दन्तः, पावकस्य जाड्यं महदिति निर्विशङ्कं वदन्तः विबुधाः निज-मन्दिरं भेजिरे।

---

अन्नम् — — भंडिगडि चन्द्रशेखरभट्टः

अन्नं ब्रह्ममयं वदन्ति विबुधा निन्द्यान्न चान्नं क्वचित्,
अन्नेनेह पितॄन् सुतर्पय सखे चान्नाय यत्नं कुरु।
अन्नात्पोषय देवतातिथिगणान् अन्नस्य दानं चरेत्,
अन्ने सन्निहिता शिवस्य दयिता त्वामन्न नित्यं भजे॥

वेदः —

वेदो नित्यमधीयतां द्विजवरै र्वेदं तु सङ्गोपयेत्,
वेदेनैव हि भूसुरः सहि भवेद्वेदाय यत्नं कुरु।
वेदादेव हि भारतस्य धवला कीर्तिः सदोज्जृम्भते,
वेदस्याध्ययनेन तोषय ऋषीन् वेदे मतिः स्थीयताम्॥

# श्रीरामानुजाचार्यः

"भवरः"

[ अनुवर्तते ]

गोवि–यद्येवं भवद्भिरालोच्यते तर्हि एवं कुतो न स्यात्? विधि-वशात् तत्रभवानेव कुलोत्तुंगस्य अधीनो भवेत् — शान्तं पापं याकाचित् हानि र्भवतो भवेत् चेत्तर्हि ते किमेवं न भीषयेयुः साधारणजनान्? युष्माक माचार्यस्य या गति स्सैव युष्माकं भविष्यति यद्यस्मन्मतं न स्वीकृतम् – इति। अतः दुर्बलाः यदा कदाचित् स्वाधीना एव भवेयुः। किञ्च; यदि तत्रभवान् सजीवः स्वतन्त्रश्चेति विषयो विदितः स्यात्तर्हि जनाः तेनैव विश्वासेन वैष्णवमत-संरक्षणाय उद्युक्ताः स्युः एवं शिष्याणां आलोचने प्रवर्तिते रामानुजः तटस्थो भूत्वा चिन्तितु मारेभे।

यज्ञ – अथ समयो नाऽस्ति। गन्तव्यं चे दिदानीमेव गन्तुं युक्तम्। अन्यथा जना स्तत्रभवन्तं द्रष्टु मागच्छेयुश्चेत् कार्यभङ्गः स्यात्। राजभटा अपि सत्वर मागच्छेयुः। अतः गोन्दिमिश्रेण साकं तत्रभवद्भिः इदानी मेव इतः प्रस्थातव्यम्। अहमत्रैव स्थित्वा वैष्णवं रक्षिष्यामि।

निजशिष्याणां गाढाभिमानं विज्ञाय श्रीरामानुजः गोविन्द-मिश्रेण साकं मैसूरुराज्यं गन्तुं निश्चिकाय। अत्यावश्यकैः परिमितै र्वस्तुभि स्साकं श्रीरामानुजः गोविन्दमिश्रे अनुगच्छति प्रस्थितः।

रामानुजस्य आन्तरङ्गिकभक्तबृन्दे कोंगुपिराट्टिर्नाम काचि द्वैष्णवी वर्तते स्म। तस्य पतिः अलगेशः शैवो ब्राह्मणः। भिन्न

मतयोरपि तयो र्दम्पत्योः प्रीतिरविच्छिन्ना प्रावर्तत। चोलराज्ये मतकल्लोलसमये कोंगुपिराट्टिः श्रीरामानुजं प्रति भृशं चिन्तितवती। प्रच्छन्नवेषः श्रीरामानुजः गोविन्दमिश्रेण साकं तस्या एव गृहं गतः।

अलगेशः अन्तर्गत्वा पत्नी माह — "त्वदर्थं द्वावागतौ स्तः" इति। सा प्रासादोपरिभागात् अधोऽवतीर्णा ता वद्राक्षीत्। स रात्रिसमयः। बहिरन्धकारः। दीपप्रकाशे साऽपृच्छत् कौ भवन्ता विति? तौ समाधानं न दत्तवन्तौ। उभावपि तुल्यरूपौ तयोरेकं सा प्रत्यभिज्ञातवती "विना काषायं नून मयं रामानुज एवे"ति। सहसा सा भर्तार मुपसृत्य तयो रातिथ्यकरणाय प्रचोदितवती। प्रच्छन्नवेषेण श्रीरामानुज स्समागतः इति सा आतिथ्ये समाप्ते पत्युर्निवेदयामास। सा महान्त मानन्दं अन्वभवत्। कुलोत्तुंगस्य शासना दात्मानं मोचयितुं रामानुजः प्रच्छन्नवेषेण सञ्चरतीति विज्ञाय तौ दम्पती अतीव हृष्टौ तस्य मङ्गल माशंसानौ चाऽस्ताम्।

राजभटाः श्रीरामानुजं अन्विष्य बध्द्वाऽनेतुं प्रेषिताः कुलोत्तुंगेन। कूरेशबन्धनसमय एव रामानुजः श्रीरङ्गं परित्यज्य अन्यत्र गत इति विषयो विदितः। श्रीरङ्गे विद्यमानैः वैष्णवप्रमुखैः श्रीरामानुजः प्रस्थाप्य संरक्षित इति रामानुजः सशिष्यः सन् कोंगुपिराट्टि गृहे आतिथ्यं स्वीकृत्य गतवानिति च वृत्तान्तं विदित्वा चोलराजो विस्मितोऽभवत्। शैवस्य गृहे रामानुजस्य आतिथ्यं वा इतीदं तस्य आश्चर्यकर मासीत्। किं च तौ दम्पती रामानुजस्य अन्तरङ्गभक्ता वभूता मित्यपि विदित मासीत्।

श्रीरामानुजः गोविन्दमिश्रेण साकं कोंगुपिराट्टिगृहे तस्यां रात्रौ आतिथ्यं स्वीकृत्य विश्रम्य परेद्युः ततः प्रस्थाय वह्निपुष्करिणीं ततः सालग्रामं गतः। सालग्रामे पाषण्डा बहुलाः। अतः तत्र वासो न युक्त इति मत्वा जैनराज्यं प्रविष्टः। चोलराज्यसीमां अतीत्य जैनराज्ये भक्तग्रामं प्राविशत्। तत्र जैनराज्याधिपतिः विठलदेवरायः पालयति।

भक्तग्रामवासिनः रामानुजं महानुभावं ज्ञात्वा महता आदरेण सपर्याभिश्च सभाजयामासुः। श्रीरामानुजः तेभ्यः विशिष्टाद्वैतसिद्धान्तं बोधयामास। एवं स ग्रामाद्ग्रामं गच्छन् जनेभ्यः स्वमतं बोधयन्नासीत्। सर्वे जनाः रामानुजमतं सभक्तिश्रद्धं स्वीकुर्वन्तः तं महता गौरवेण पूजयामासुः। जैनराज्ये सर्वे जनाः ग्रामाद्ग्रामं गच्छतः श्रीरामानुजस्य मतं स्वीकृत्य वैष्णवा भवन्तीति वार्ता विठलदेवरायस्य जैनराजस्य कर्णेऽपतत्। स कोपाविष्टः गोविन्दमिश्रेण सह रामानुजं स्वान्तिक मानेतुं निजभृत्यान् प्रेषयामास। रामानुजः चोळराज्येऽवर्ततेति तस्मात् राज्ञः भीतोस्मिन् राज्ये प्राविशदिति विदितं जैनराजस्य। अत स्तं स्वराज्ये निवेशयितुं न युक्तं अन्यथा स्वमतस्य हानि रवश्यं भविष्यति इति मत्वा राजा विठलदेवरायः रामानुजं सशिष्यं निजराज्यात् प्रस्थापयितुकाम स्त मानेतु माज्ञापयामास। राजभटाः रामानुजं गोविन्दमिश्रं च आनीय राज्ञः समीपे स्थापयामासुः। राजा विठलदेवरायः पत्न्या शान्तलादेव्या सह निजप्रासादे आसीन आसीत्। सशिष्यं रामानुजं दृष्ट्वा राज्ञी उत्थिताऽन्तगृहं गन्तु मुद्युक्ता। राज्ञा निवारिता पुन स्तत्रैव तस्थौ। रामानुजसन्दर्शनेन राज्ञः उत्थाय पादाभिवन्दनं कर्तुमिच्छा समुत्पन्ना। राजा तथाऽकरोत्; राज्ञी चानुचकार। रामानुजः तौ दम्पती

आशीर्वादेन अन्वगृह्णात् । रामानुजः तदनुचरश्च सुखासनो-पवेशितः ।

विठलदेवरायः – तत्रभवान् कुत आयातः ?

रामानुजः – भवतो भृत्यैः आनीता वयम् ।

विठलदेवरायस्य हृदये इदं वाक्यं सूचीवत् विद्धम् । स एव तमानेतु माज्ञापयामास । तद्विस्मृत्य भाषमाणं आत्मानं धन्यं मन्यते स्म । अन्ते स सविनयमेव माह ।

विठल-क्षमार्होऽस्मि । नाऽस्माकं भवत्सु द्वेषः क्रोधो वा । वयं तु जैनाः; अस्मकं प्रजा अपि जैनाः । भवन्त स्तावत् अस्मद्राज्ये विद्यमानान् जनान् वैष्णवान् कर्तुं प्रयतन्ते इति श्रुत्वा ........ ।

रामा-(विहस्य) तत्रभवान् कुलोत्तुंगचक्रवर्ती न भवति खलु ।

विठल-नाऽहं तथा कठिनोऽस्मि; परन्तु स्वमते मे महान् विश्वा-सोऽस्ति ।

रामा-तथा भाव स्समीचीन एव, किन्तु अन्यमतेषु विद्वेषः कुतो भवताम् ?

विठल-न मे द्वेषोऽस्ति; अपितु स्वमतं रक्षणीयं खलु ।

रामा-कुलोत्तुंगचोल इव भवानपि जनान् अंधकारे स्थापयितु मिच्छति किम् ? सत्यान्वेषणोपयोगि विचारविनिमयस्य आलोचनाविधानस्य च अवकाशं अदत्वा मूढविश्वास एव अवलम्बनीय इति वा भवता माशयः ?

[अनुवर्तते]

सुकविता यद्यस्ति राज्येन किम् ?

## कविताविनोदः—

(१०) समस्या ।

"भवत्यमोघा भुवि मन्त्रशक्तिः" ॥

★

उत्सुकै रेतां समस्यां सचमत्कारं पूरयित्वा एतन्मासान्तात् पूर्वमेव अधोविद्यमानचीटिकायां स्वसङ्केतादि यथासूचितं सविरळं विलिख्य, साकं प्रेषणीया । प्रेषितेषु रुचिरतया विद्यमानाः श्लोकाः आगामिन्यां गैर्वाण्यां प्रकटीकरिष्यन्ते ।

**कविताविनोदाय**

नाम –

सङ्केतः –

नगरं / ग्रामः

पत्रालयः –

मण्डलम् –

प्रान्तः –

---

सम्पादकः, "गैर्वाणी" संस्कृतभाषाप्रचारिणी सभा, चित्तूरु (आ. प्र.) इति सङ्केताय प्रेषयन्तु ।

Please mention your membership Number for
easy correspondence.

*R. N. 1845/60.* *Postal C. T. R. 11.*
आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-'65.
Licensed to Post without Prepayment. LICENCE No 1.

भारतसर्वकारेण पुरस्कृता च

गैर्वाणी

वार्षिकम् ५-००

---

# प्रहेलिका

★

विषं भुङ्क्ष्व महारज स्वजनैः परिवारितः ।
विना केन विना नाभ्यां कृष्णाजिन मकण्टकम् ॥

विगतः षकारो यस्मात्, वकारेण विना, नकारद्वयरहितं, कृष्णाजिनं - अत्र ककारषकारनकाराणां निष्कासने "ऋ आजि अम्" इति स्थिते संधौ कृते "राज्यम्" ।

Published by Sri N. Ramanatha Aiyar, B.A., B.L., Advocate & Secretary,
S. B. P. Sabha Chittoor. (A. P.)
Printed by Sri K. V Raghavan (in-charge)
at Vijaya Press, Chittoor. (A. P.) C. 1500.